विचारभेदं प्रदर्शयति—

**तत्र ज्ञानशून्याश्चतस्रो वैज्ञानिक्योऽन्याः ॥ १६४ ॥**

अज्ञानभूमयः सप्त, ज्ञानभूमयश्च सप्त मिलित्वा चतुर्दशभूमयोऽभूवन् । तासु प्रथमाश्चतस्रा विज्ञानशून्याः । अन्या दश विज्ञानसमन्विता विज्ञातव्याः । समष्टिभूतानाम् उद्भिज्ज-स्वेदजाण्डजजरायुज-पशूनां चिदाकाशसम्बन्धिन्यो याश्चतस्रोऽज्ञानभूमयः सन्ति तासु जडराज्यजीवसम्बन्धोपेतत्वान्न कथमपि विज्ञानविकाशो भवितुमर्हति । अतस्तद्विषये कस्यचिदपि दार्शनिकविचारस्य स्थापनावसर एव नास्ति । एतासां चतसृणामनन्तरं यास्तिस्रोऽज्ञानभूमयः, क्रमिकात्मज्ञानपरिपूर्णायाश्च सप्तवैदिक्यो दार्शनिकभूमयः सन्ति, एतासु दशस्वपि यथाधिकारं वरीवर्त्ति किल वैज्ञानिकः सम्बन्धः । एता अनुसृत्य अधिकारानुरूपा दार्शनिका अधिकाराः प्राप्यन्ते । सप्तज्ञानभूमीनामनुसारेण सप्तवैदिकानि दर्शनानि जगत्प्रसिद्धानि सन्ति । अवशिष्टानां तिसृणां भूमीनां सम्बन्धनिबन्धनान्यनेकानि अवैदिकदर्शनानि जगति लभ्यन्ते ॥ १६४ ॥

ताभिः कर्मसम्बन्धं निदर्शयति—

**अतो बुद्धिवैचित्र्यमियत्पापपुण्ययोः ॥१६५॥**

अतः कारणादेव पापपुण्ययोरेतावद्बुद्धिवैचित्र्यं निभाल्यते । नराणां नारीणां चानेकेऽधिकाराः सन्ति । तिसृणामज्ञानभूमीनां सप्तानां च वैदिकज्ञानभूमीनां प्रकारभेदेन मानवा दशाधिकारवन्तो भवन्ति । पुनरपि ते त्रिगुणमनुसृत्य त्रिविधा दृश्यन्ते । तेषु चापि प्रकृतिप्रवृत्तिविभिन्नता । अतः संसारे पापपुण्ययोः समधिकं वैचित्र्यं परिदृश्यते, एतत्कारणं किन्न मनुष्यलोके पापबुद्धेः पुण्यबुद्धेश्चानेकप्रकारकत्वमेव समवधेयम् ॥ १६५ ॥

अन्यदपि—

न सर्वादानक्षमत्वमस्याः ॥ १६६ ॥

अस्या मानवबुद्धेः सर्वादानस्य सर्वपदार्थग्रहणस्य क्षमत्वं सामर्थ्यं न विद्यते। यथा हि पापपुण्ययोरनेकेऽधिकारास्तथैव ज्ञानाज्ञानभूमिभेदानुसारं मानवबुद्धीनां नानात्वं सिध्यति। अत एका बुद्धिर्नैव किल भवितुमर्हति सर्वविषयग्रहणसमर्था ॥ १६६ ॥

अन्यच्चापि—

न वा सर्ववेदित्वं सर्वेषाम् ॥ १६७ ॥

सर्वेषां मानवानां सर्ववेदित्वं सर्वज्ञत्वं न विद्यते। सर्वः सर्वं न जानातीत्यर्थः। बुद्धिवैचित्र्यादेव कारणात् पुमांसः स्त्रियो वा सर्वानपि विषयान् समानरूपेण ग्रहीतुं नैव शक्नुवन्ति। पूर्वजन्मार्जितसंस्कारबलेनाज्ञानज्ञानाधिकारवती बुद्धिर्मानवैरधिगम्यते। केनापि कामप्रधानः केनचिदर्थप्रधानः केनापि वा धर्मप्रधानो मोक्षप्रधानो वा विषय आधिक्येनावधारयितुं शक्यते। कोऽपि स्थूलविषयं कश्चिच्च सूक्ष्मविषयमधिकं वेत्ति। अतः सर्वेषां सर्ववेदिता न सम्भवति॥१६७॥

निष्कर्षमभिधत्ते—

अतोऽधिकारोऽपेक्ष्यः ॥ १६८ ॥

अतः कारणादेव अधिकारस्यापेक्षा विद्यते। श्रुतिस्मृतिप्रतिपादितानां वर्णाश्रमाध्ययनाध्यापनाचारविचारविशेषधर्मादीनां सर्वेऽप्यधिकारभेदाः पूर्वोक्तमकाट्यं दार्शनिकसिद्धान्तं निर्विभ्रति। यो वा मानवः सम्प्रदायो धर्ममतं वाऽऽचाराद्यधिकारभेदं नाङ्गीकरोति स नूनं प्रमादग्रस्तो जायत इत्यत्र नास्ति सन्देहलेशः ॥ १६८ ॥

मुक्तिप्रसंगात् पुनरुच्यते—

**जीवन्मुक्तानुभवस्त्रिविधस्त्रिभाववत् ॥ १६६ ॥**

त्रिभाव इव जीवन्मुक्तस्यानुभवस्त्रिविधो विज्ञेयः। सच्चिदानन्दरूपं त्रिभावमनुसृत्य यदि भगवद्भावदर्शनं त्रिभावात्मकं सिद्धम्, तर्हि तदनुसारेणैव जीवन्मुक्तावस्थायां तदीयान्तःकरणस्य स्वतन्त्रां स्थितिमनुसृत्य तदन्तःकरणसम्बन्धिनीमलौकिकीं धारणामपि त्रिप्रकारां विजानीयात्। लोकातीतस्य बुद्धेरप्यगोचरस्य रहस्यस्यैतस्य विषये स्मृतावपि प्रोक्तम्। तथाहि—

मनसा मनसि च्छिन्ने स्वेन्द्रियावयवात्मनि।
सत्यालोकाज्जगज्जाले प्रच्छन्ने विलयं गते॥

छिद्यते क्षीर्णसंसारकलना कल्पनात्मिका।
भ्रष्टबीजोपमा सत्ता जीवस्य इति नामिका॥

पश्यन्तीनाम कलितोत्सृजन्ती चेत्यचर्वणाम्।
मनोमोहाभ्रनिर्मुक्ता शारदाकाशकोशवत्॥

शुद्धा चिद्भावमात्रस्था चेत्यचिन्त्यापलं गता।
समस्तसामान्यवती भवतीर्ण-भवार्णवा॥

अपुनर्भव-सौषुप्तपद-पाण्डित्यपीवरी।
परमासाद्य विश्रान्ता विश्रान्ता वितते पदे॥

एतत्ते मनसि क्षीणे कथितं परमं पदम्।
द्वितीयं शृणु विप्रेन्द्र! शक्तेरस्याः सुपावनम्॥

एषैव मनसोन्मुक्ता चिच्छक्तिः शान्तिशालिनी।
सर्वज्योतिस्तमोमुक्ता वितताकाशसुन्दरी॥

वनसौषुप्तलेखावत् च्छिलान्तः सन्निवेशवत्।
सैन्धवान्तःस्थरसवत् वातान्तः स्पन्दशक्तिवत्॥

कालेन यत्र तत्रैव परां परिणतिं यदा ।
शून्यशक्तिरिवाकाशे परमाकाशगा तदा ॥

चेत्यांशोन्मुखतां नूनं त्यजन्तीव चापलम् ।
वातलेखेव चलनं पुष्पलेखेव सौरभम् ॥

कालताकाशते त्यक्त्वा सकले सकलाकला ।
न जडा नाऽजडास्फारा धत्ते सत्तामनामिकाम् ॥

दिक्कालाद्यनवच्छिन्न - महासत्तापदं गताम् ।
तूर्यं तूर्यैकलितामकलङ्कामनामयाम् ॥

काञ्चिदेव विशालाञ्च साक्षिवत्समवस्थिताम् ।
सर्वतः सर्वदा सर्वप्रकाशस्वादुतत्पराम् ॥

एषा द्वितीया कथिता पदता तव सुव्रत ।
तृतीयं शृणु वक्ष्यामि पदं पदविदांवर ॥

एषा दृक्चेत्यवलनादनामार्थां पदं गता ।
ब्रह्मात्मसत्यादि शब्दार्था भतीतोदेति केवला ॥

स्थैर्येण कालतः स्वस्था निष्कलंका परात्मना ।
तूर्यातीतादिनामत्वादपि याति पदं पदम् ॥

सा परा परमाकाष्ठा प्रयानं शिवभाववतः ।
चित्स्येका निरवच्छेदा तृतीया पावनीस्थितिः ॥

चिरमस्यां प्रतिष्ठायां सर्वाध्वध्वगदूरगाः ।
सा ममाप्यङ्ग वचसां न समायाति गोचरम् ॥ इति ॥१९९॥

विज्ञानं तत् सुस्पष्टयति—

## तद्गतेः स्वाभाविकत्वात् ॥ २०० ॥

तस्य जीवन्मुक्तस्य गतेः स्वाभाविकत्वात् पूर्वोक्तोनुभवः प्राप्यते । सहजकर्मप्रभावे सर्वथा निपतितस्य जीवन्मुक्तमहापुरु-

षस्य जैवादिकर्मबाधां निराकुर्वतः सरलप्रवाहपतितवस्तुवत् अन्तःकरणं क्रमप्राप्तामवस्थामतिक्रामत् दृढतया स्वस्वरूपे विलयं गन्तुमग्रेसरति। यथा नदी समुद्रसमागमकाले समुद्रेण सह तादात्म्यभावधारणसमये समुद्रान्तगर्भं प्राप्ता अन्ते सामुद्रिकाद्वैतसत्तायां परिणमति, तथैवात्मज्ञानिनो जीवन्मुक्तस्यान्तःकरणं सहजकर्मणः स्वाभाविकमन्तिमं वेगं दधानं पूर्वोक्तमनुभवं प्राप्नोति। अन्यथा स्वस्वरूपानुभवं एकरसोऽद्वैतभावापन्न एव। नन्ववस्थायामस्यां किमस्ति काचिन्न्यूनता, यया विभिन्नभावा अनुभूयन्ते एतज्जिज्ञासुशंकां समाधत्ते—सहजकर्मणोऽन्तिमवेगेन हेतुना न तत् सम्भवति; किन्तु यदा पुरुषात् प्रकृतेर्व्यक्तता, त्रिगुणमय्याः प्रकृतेः स्पन्दनेन सह कर्मसम्बन्धोऽवस्थान्तरं धत्ते, तदानीं सहजकर्मणोऽन्तिमवेगसत्त्वेऽपि भेदाभेदयोरचिन्त्यया गम्भीरविज्ञानपरिपूर्णा दृशैतादृशी तिष्ठतीत्यभ्युपगन्तव्यमेव। तस्मिन् समये स्वरूपोपलब्धौ सत्यां पूर्वोक्तावस्थानामुत्तरोत्तरं परिणामेनान्तकाले स्वस्वरूपप्रतिष्ठा निश्चप्रचेति ॥ २०० ॥

प्रसंगतः कर्ममहत्तां विविनक्ति—

## कर्मनिष्पादकत्वं ज्ञानिनामपि ॥ २०१ ॥

ज्ञानिनां तत्त्वज्ञानिनां जीवन्मुक्तानामात्मज्ञानिनामपि कर्मनिष्पादकत्वं कर्मणः कर्त्तृत्वमास्ते। एतत् किल कर्मणः सर्वातिशायि महत्त्वं विद्यते। ऋते कर्मणः शरीरमेव ना स्थास्यति। समुन्नतज्ञानशालिनामपि कर्माधीनत्वात् कर्मणो महिमा सर्वोपरिवर्त्तत इत्यत्र कः सन्देहः ॥ २०१ ॥

अन्यदपि—

## भक्तानामपि ॥ २०२ ॥

भक्तानामपि कर्माधीनत्वमित्यर्थः। यथा हि ज्ञानाजनदशाया-मारुरुक्षुणा मुनिना श्रवणमनननिदिध्यासरूपं कर्मत्रयं क्रियते, जीवन्मुक्तदशायां वर्त्तमानेन योगारूढेनापि सहजं कर्म विधीयते एव, तथैव भक्तेनापि समुन्नततमावस्थायामपि कर्म परित्यक्तुं न शक्यते, कर्मसम्बन्धे पूर्वमपि बहुप्रपञ्चितम्। भक्तिशास्त्रस्य केषाञ्चिदाचार्याणां मतसम्बन्धीयशंकासमाहितये पूज्यपादो महर्षिः सूत्रमेतदाविर्भावयामास। केवलमात्मनिवेदनेनैव भक्तेः पराकाष्ठायाः प्राप्तिरिति कैश्चिद् भक्तिशास्त्राचार्यैः स्वीक्रियते। भक्तिप्राप्तये तत्तदाचार्यैरनेके विभिन्ना उपाया उपवर्णिताः, परन्तु मतस्यैतस्य प्राशस्त्यमत्रगन्तव्यम्। आत्मनिवेदनं मानसिकं कर्म। सहजातं शारीरिकं कर्म भक्तेनापि समनुष्ठेयमेव। अतः कस्यापि भक्त-शिरोमणेः कर्मत्यागोऽसम्भव एव ॥२०२॥

विज्ञानमिदं पुनरपि सुस्पष्टयति—

**आशरीरं तज्ज्ञानाभावात् ॥ २०३ ॥**

आशरीरं शरीरस्थितिपर्यन्तं तस्य ज्ञानस्य शारीरिककर्मपरि-त्यागरूपज्ञानस्याभावादभावदर्शनादित्यर्थः। कर्म शरीरसहजातम्। प्रकृतिस्पन्दनेन कर्मोत्पत्तिः शरीरं हि प्राकृतिकमेव। अतःशरीरे विद्यमाने कर्माभावोऽसम्भवः। अतः कारणादेव कर्मगतिवेत्तृभि-राचार्य्यैः कर्मणो महत्त्वं सर्वाभ्यर्हितमुक्तम् ॥ २०३ ॥

निःश्रेयसप्रसङ्गादुच्यते—

**मिथः कर्माकर्मेक्षणं कर्मयोगविज्ञानम् ॥ २०४ ॥**

मिथः परस्परं कर्माकर्मेक्षणं, कर्मण्यकर्मणः अकर्मणि च कर्मणो दर्शनं कर्मयोगविज्ञानम्। शरीरे वर्त्तमाने कर्मपरित्यागो न सम्भवतीति पूर्वमेव निर्णीतम्। कर्मत्यागस्य प्रयत्ने क्रियमाणेऽपि

शारीरिकस्य कर्मणोऽनिवार्यता स्वतः सिद्धा । इन्द्रियेषु हठान्निरुद्धेष्वपि मानसिकं कर्म भवत्येव मनसोदुर्निग्रहत्वाच्चञ्चलस्वभावत्वाच्च । संकल्पविकल्पाभ्यामृते मनसोऽस्तित्वमसम्भवम् । अतोबलात्कर्मनिरोधावस्थायां ये कर्माऽनिष्टमनुभवन्ति, ये च कामनाराहित्येन कर्मानुष्ठानेन कर्माभावमनुभवन्ति त एव कर्मयोगिनः । यतो निष्कामं कर्म दग्धबीजवन्मन्यते ॥ २०४ ॥

तत्परिणामं निर्दिशति—

## मुक्तिहेतु ॥ २०५ ॥

निष्कामं कर्म मुक्तेः कारणं भवति । कर्मानुष्ठानं विना मानवो न स्थातुमर्हति । कर्मयागेन कर्म दग्धबोजवच्चेत्तर्हि कर्मयोग एव मुक्तेः कारणम् । कर्मकाण्डस्यान्तिमः सिद्धान्तः कर्मयोग एव, स हि निःश्रेयसप्रदः ॥ २०५ ॥

कर्मयोगिनं सावधानं विधातुमुच्यते—

## अभिनिवेसादा कर्म न दुःखदम् ॥ २०६ ॥

अभिनिवेशादा अभिनिवेशपर्यन्तं कर्म न दुःखप्रदम् । कर्मणोऽनुष्ठानादभिनिवेशसम्भावना । यद्यप्यभिनिवेशमन्तरेणापि समुन्नताधिकारपरायणः कर्मयोगी स्वभावसिद्धरूपेण । कर्मानुष्ठातुं शक्नोति । परन्तु प्रकृतेः स्वाभाविकं नियममनुसृत्य कर्मानुष्ठानेनाभिनिवेशः सम्भवति । दीर्घकालिकनिरन्तरकर्मविधानेनाभिनिवेशो नाऽसम्भवः । अभिनिवेशात् कर्म समीचीनं जायते । सुतरां कर्मयोगपथपथिकहितायेदमुच्यते यत् जातेऽप्यभिनिवेशे तत्त्वज्ञानिनः कर्मयोगनिरतस्य महापुरुषस्य कृते तत्कर्म दुःखप्रदं भवितुं नार्हति ॥२०६॥

विज्ञानमिदं पुनः परिपोषयति—

**तस्मान् न बन्धनं क्षणिकत्वात् ॥ २०७ ॥**

तस्मात् कारणात् क्षणिकत्वात् क्षणस्थायित्वादभिनिवेशस्य बन्धनं न जायते। अभिनिवेशेन क्रियमाणं कर्म समीचीनं भवति। अतःकारणात् कर्मयोगिष्वपि बहुत्राभिनिवेशसम्भावना। परन्तु कर्मयोगिनामन्तःकरणस्य तत्त्वज्ञानज्योतिःपरिपूर्णत्वे वासनाकल्मषरहितत्वे तदीयोऽभिनिवेशः क्षणिक इत्यत्र न सन्देहः। क्षणिकत्वात्तन्नाशोऽपि सुतरां सम्भव एव। यतस्तत्त्वज्ञानेन निष्कामभावेन चाभिनिवेशहानिः। अतोऽभिनिवेशस्य क्षणिकत्वान्नैव भवितुमर्हति कर्मयोगिनां हानिरिति ॥ २०७ ॥

पुनः स्पष्टीकुरुते—

**चित्तभूमिपरिवृत्त्यभावाच्च ॥ २०८ ॥**

चित्तभूमेः परिवर्त्तनराहित्याच्चापि कर्मयोगिनामभिनिवेशतो न भवति क्षतिरित्यर्थः। समधिगतात्मज्ञानस्य योगिराजमहापुरुषस्य कामनारहितत्वात् तदीयचेतसो व्युत्थानदशाऽपि क्षणस्थायिन्येव। तदीया चित्तभूमिः स्वरूपधारणस्य हेतुना सदैवैकरसा। कर्मणामनुष्ठानकाले अभिनिवेशसंयुक्तत्वेन साधुरीत्या कार्यसाधनसमये कर्मणः सादिसान्तत्वात् तदन्तेऽभिनिवेशनाशात् योगिराजस्य स्वाभाविकी चित्तस्थितिः सदैव तिष्ठति। अतःकारणात् अभिनिवेशदशायां कर्मणि तन्मयतां प्राप्तस्यापि तस्य चित्तस्थितिर्नैव हानिमुत्पादयति ॥ २०८ ॥

कर्मयोगिनं सावधानीकर्त्तुं पुनराह—

**दुःखदमारागद्वेषं तत् ॥ २०९ ॥**

तत्कर्म आरागद्वेषम् रागं द्वेषं च यावत् रागद्वेषवशात्क्रियमाणं

दुःखदं क्लेशप्रदं जायते. आसक्त्यैव रागद्वेषौ समुत्पद्यतः। रागद्वेषयोरन्योन्याश्रयत्वं सिद्धम्। तौ किल रजस्तमोभ्यां समुत्पन्नाविति पूर्वमेव प्रतिपादितम्। तावेतौ सत्त्वगुणविरोधिनौ सत्त्वगुण एवानन्दप्रतिष्ठा। सुतरां सत्त्वगुणविरोधिषु वृत्तिसमूहेषु आनन्दराहित्यात् दुःखमवश्यम्भावि। रागकार्ये कथमानन्दप्रतीतिरिति शंकां समाधत्ते क्षणिक आनन्दो ज्ञानवतो दुःखद एव। अन्यच्च रागद्वेषसद्भावाद् वासनोत्पद्यते। रागद्वेषवशीभूतेन क्रियमाणस्य कर्मणो दुःखप्रदत्वं स्वाभाविकम्। अविद्याऽस्मितयोरभावात् कर्मयोगिमहात्मनि नचापि तत्कर्म वासनां बन्धनं वा समुत्पादयितुमर्हति ॥२०९॥

विज्ञानमिदं स्पष्टीकुरुते—

**बन्धनवत् ॥ २१० ॥**

कर्मयोगिनः कर्म बन्धनवत् प्रतीयत इत्यर्थः। निष्कामव्रतपरायणो महात्मा यदा धर्मकार्ये प्रवर्त्तते वासनारहितोऽपि कर्मणः स्वाभाविकीं गतिमनुसृत्य कार्यविशेषे स्वीयं रागं प्रदर्शयति, किं वा धार्मिके जने रागमधार्मिके चोपेक्षां द्वेषं वा दर्शयति, तदानीमसौ लौकिकदृष्ट्या बन्धनदशां प्राप्त इव प्रतीयते। यतोऽसावाभ्यन्तरिकाविद्यास्मितावासनाजनितसंकल्पशून्योऽपि धर्मकार्यं सुसाधयितुं समुत्पन्नाभिनिवेशो रागद्वेषवशंवदवत् प्रतीयमानो भवति। तदानीं तदीयां वहिश्चेष्टां विलोक्य विषयासक्तस्तत्त्वज्ञानविहीनो जनो लोकातीतदशां तदीयामनुभावितुमसमर्थस्तमपि बद्धजीववन्मन्यते। अत एव कारणात् जीवन्मुक्तो महात्मा संसारे दुर्लभो जनसाधारणदृष्टिमतिशेते च ॥ २१० ॥

सावधानं विधातुमाह—

**क्लिष्टमस्मितागं बद्धवत् ॥ २११ ॥**

अस्मितागम् अस्मितागतं क्लिष्टं कर्म बद्धवत् ज्ञानिनमपि बद्ध-

वत् प्रत्याययति । यदि तत्त्वज्ञानिनो महापुरुषस्य कर्मयोगदशायां कदाचिदस्मिताप्रादुर्भावस्तदाऽसौ बद्धजीव इव प्रतीयते, तस्यान्तःकरणे च क्लिष्टवृत्तीनामुदयोऽपि जायते । यद्यसौ रागद्वेषसंयुक्तकर्मणि बद्ध इव ज्ञायते तर्ह्यस्मितादशायां बद्धवत्प्रतीतो भविष्यत्येवेत्यत्र कः सन्देहः । अथ च कर्मयोगिनोऽपि तस्य अस्मितारागद्वेषत ईषदपि सम्बन्धः, घटनाचक्रमनुसृत्य मनःवृत्तिस्तस्यास्मितां प्रतिपद्यते, तदानीमवश्यमसौ बद्धजीव इव परिज्ञास्यते । अस्मिताप्रभावात् तत्र क्लिष्टवृत्तयः समुत्पत्तुमर्हन्ति । यद्यपि वृत्तयस्ताः क्षणस्थायिन्यः, परन्तु स्वल्पकालायैव अक्लिष्टवृत्तीर्निरुध्य क्लिष्टवृत्तयः समुद्यन्त्येव । अतः कर्मयोगिना सदा सावधानेन भवितव्यम् । यतस्तदन्तरात्मनि अस्मितोत्पत्तिकरोऽहम्भावो न प्राकट्यमासादयेत्, सत्त्वगुणविरुद्धाः क्लिष्टवृत्तयश्च नाधिपत्यं कर्त्तुं प्रभवेयुः ॥ २११ ॥

तथात्वे किं भयमित्युच्यते—

## जन्मान्तरमपूर्णत्वे ॥ २१२ ॥

अपूर्णत्वे सति जन्मान्तरं जायते । पूर्वोक्तत्रिज्ञानमनुसृत्य धृतावपूर्णतायां सत्यां जन्मान्तरस्य भयमुत्पद्यत इतिभावः । योगिराजमहात्मनि यावत् तत्त्वज्ञानस्य वासनानाशस्य, सात्त्विकधैर्यस्य च पूर्णत्वं न भवति तावत् जन्मान्तरस्य भीतिस्तिष्ठत्येव । पुराणप्रतिपादितजडभरतजीवनमत्रोदाहरणम् । अभिनिवेशपर्यन्तं वृत्तयस्तिष्ठन्ति । अन्यथा कार्यं सुसिद्धं न भवति । रागद्वेषयोः क्षणिकरूपेणोदीयमानत्वेऽपि सिद्धान्ततो न कापि हानिः, केवलं लोकदृष्टौ योगिराजोऽसौ बद्धवत्प्रतीयते । किन्तु यदि तदन्तःकरणे बद्धमूलायामस्मितायां जातायां सात्त्विकं धृतेरभावोऽत्रगन्तव्यः । असम्पूर्णदशायामत्र यदि शरीरपातः स्यात् तर्हि जन्मान्तरं भवितुमर्हति ।

तस्य भविष्यतो जन्म न साधारणम्। अतः कर्मयोगिना सदा सावधानेन भवितव्यम् ॥ २१२ ॥

विज्ञानमेतत् सुस्पष्टयति—

**न ज्ञानहानमविद्याऽभावात् ॥ २१३ ॥**

अविद्याया अभावेन हेतुना ज्ञानहानिर्न स्यात्। जीवबन्धनदशा-प्राप्तिहेतुरविद्यैव। यदि तत्त्वज्ञानाधिगमेन वासनानाशेन च योगि-राजहृदयेऽविद्यानिलयविनाशपूर्वकं विद्यामन्दिरप्रतिष्ठायां सत्यां सात्त्विकाया धृतेरसम्पूर्णत्वे न पूर्वोक्तदशा समुद्भवेदसावधानतया च जन्मान्तरमाविरभवत्, तदापि मूलच्छेदवशात् तदीयान्तःकरणे तत्त्वज्ञानाभावो न भवितुमर्हति। स च महात्माऽत्रशिष्टं संस्कारं समूलमुन्मूलयन् सात्त्विकीं धृतिं लभमानः कर्मयोगसाहाय्येन निःश्रेयसमधिगन्तुमर्हति ॥ २१३ ॥

विज्ञानमेतद्दृढयति—

**तथा भावे बलाभावो हेतुः ॥ २१४ ॥**

तथा भावे योगिराजस्यापि पुनर्जन्मनि बलस्याभाव एव निदान-मवगन्तव्यम्। सात्त्विकस्य कर्त्तुः, कर्मणः धैर्यस्य च सम्बन्धे गीतो-पनिषदि प्रोक्तम्। तथाहि—

मुक्तसंगोऽनहंवादी धृत्युत्साहसमन्वितः।
सिद्ध्यसिद्ध्योर्निर्विकारः कर्त्ता सात्त्विक उच्यते ॥

नियतं संगरहितमरागद्वेषतः कृतम्।
अफलप्रेप्सुना कर्म यत्तत् सात्त्विकमुच्यते ॥

धृत्या यया धारयते मनः प्राणेन्द्रियक्रियाः।
योगेनाऽव्यभिचारिण्या धृतिः सा पार्थ सात्त्विकी ॥

एतत्त्रितयं यत्र कर्मयोगिनि पूर्णरूपेण विद्यते तत्रैव पूर्णमात्मबलं विकसति। यदि तत्रैकस्यापि अभावो भवेत् तर्हि आत्मबलस्य न्यूनता सम्भवति। एवमात्मबलाभावहेतुना योगिराजः पूर्वजन्मधारणविपदा ग्रस्यते ॥ २१४ ॥

निष्कर्षमुदीरयति—

**अतोज्ञानिनामवधेयम् ॥ २१५ ॥**

अतः पूर्वोक्तकारणात् ज्ञानिनामवधेयम्, ज्ञानिनाऽपि सावधानेन भवितव्यमित्यर्थः। सर्वोच्चकर्मयोगावस्थायामपि येषां भयानां सम्भावना तानि सुस्पष्टरूपतो दार्शनिकयुक्त्या प्रतिपाद्य तन्निष्कर्षं वक्ति यत् तत्त्वज्ञेन महापुरुषेणापि अन्तिमदशां यावत् सावधानेन स्थातव्यमिति। असावधानतया बन्धनं, सावधानतया च मुक्तिरिति दैवीमीमांसादर्शनसिद्धान्तः। अतोऽघटनघटनापटीयस्या महाशक्तेः सम्मुखं शिरोनमयता ज्ञानिनाऽपि सदैवातिसावधानतया निःश्रेयसमार्गेऽग्रेसर्त्तव्यमिति ॥ २१५ ॥

पुनरुदीर्य्यते—

**कर्मयोगिनाञ्च ॥ ११६ ॥**

कर्मयोगिनाऽपि सावधानेन भवितव्यमिति भावः। तत्त्वज्ञानिनाऽपि न कर्म परित्यक्तुं शक्यते क्रियत एव। अतस्तत्त्वज्ञानिनमुद्दिश्य पूर्वसूत्रप्रवृत्तिः। कर्मयोगिनं समुद्दिश्यैतत्सूत्रप्रवृत्तिरवधेया। उक्तं गीतोपनिषदि—

सांख्ययोगौ पृथग्बालाः प्रवदन्ति न पण्डिताः।
एकमप्यास्थितः सम्यगुभयोर्विन्दते फलम् ॥
यत्सांख्यैः प्राप्यते स्थानं तद्योगैरपि गम्यते।
एकं सांख्यं च योगं च यः पश्यति स पश्यति ॥

चितः सतश्च भावस्य पृथक्पृथगवलम्बनेन परमानन्दपारावारे निमज्जनयोग्यस्य निःश्रेयसस्य प्राप्तये सांख्यं योगश्चेत्युपायद्वयं विद्यते। सांख्ये ज्ञानयोगस्य योगे कर्मयोगस्य च प्रधानमवलम्बनं क्रियते। ज्ञानस्य कर्मणश्चान्योन्याश्रयत्वं तिष्ठति। प्रथमे ज्ञानस्य द्वितीये च कर्मणः प्राधान्यम्। अतः पूज्यपादमहर्षिः सूत्रकारः पूर्वसूत्रद्वारा ज्ञानयोगिनं सावधानं विधाय सूत्रेणैतेन कर्मयोगिनं सावधानीकुरुते। कर्मानुष्ठानेन पूर्वोक्तविपदा कर्मयोगी ग्रस्तो भवितुमर्हति। अतः कर्मयोगिना सात्त्विकस्य कर्तृत्वस्य कर्मणः, धैर्यस्य च वैज्ञानिकं रहस्यं हृदयङ्गममनुष्ठाय अतिसावधानतया जीवनयात्रानिर्वाहो विधेय इति॥ २१६॥

प्रकृतविषयं पुनरनुसरति—

तत्त्वधीरादौ॥ २१७॥

आदौ प्रथमं तत्त्वधीः तत्त्वस्य ज्ञानमुत्पद्यते। जीवः प्रथमं किलाज्ञानभूमिमतिक्रम्य ज्ञानभूमेरधिकारी भवन् तत्र प्रविशति, ततश्चोत्तरोत्तरमग्रेसरन् आत्मोन्मुखतां प्रपद्यते। ज्ञानभूमिषु कीदृग्धारणायोग्यताज्ञानाधिकारान् प्राप्नुवन्तो महात्मानस्तत्त्वज्ञानिनो मोक्षमार्गेऽग्रेसरन्तीति पूर्वमेव सुनिर्णीतम्॥ २१७॥

तदनन्तरक्रमो निरूप्यते—

क्षयस्ततोऽसद्वासनायाः॥ २१८॥

ततस्तदनन्तरं च असद्वासनायाः क्षयो नाशो जायते। तत्त्वज्ञानक्रमोन्नत्या सहैव ज्ञानिना यदा याथातथ्येन जगतः स्वरूपं प्रतीयते, सदसद्बोधेन बन्धनमोक्षयोर्धर्माधर्मयोः सुविचारेण भाग्यवान् साधको जीवस्य यथार्थमभ्युदयमवधारयति तदानीं तस्यासत्कर्मतो-

ऽरुचिरुत्पद्यते। अतस्तस्मिन् काले सद्वासनायाः प्रतिष्ठा असद्वासनायाश्च विलयो जायते ॥ २१८ ॥

तत्पश्चात् किमिति कथ्यते—

**लयस्ततः सद्वासनायाः ॥ २१९ ॥**

ततोऽसद्वासनाक्षयानन्तरं सद्वासनाया अपि लयो भवति। क्रमशः समुन्नतिमासादयंस्तत्त्वज्ञानी यदाऽभ्युदयनिःश्रेयसयोः पार्थक्यमनुभवति तदाऽसौ सर्वप्रकारामपि वासनां वन्धननिदानं जन्ममृत्युरूपगमागमचक्रहेतुं मन्यते। तत्त्वज्ञानसमुन्नतदशायां तस्य महापुरुषस्य सत्संकल्पमात्रतोऽप्यरुचिरुत्पद्यते। स हि सत्संकल्पितानि निखिलान्यपि कर्माणि परित्यजति। संकल्पपूर्वकपुण्यकर्मानुष्ठानमपि न श्रेयस्करं मन्यते ॥ २१९ ॥

क्रमस्यैतस्य रूपान्तरमभिधत्ते—

**क्षीणत्वं वा ॥ २२० ॥**

किं वा सद्वासनायाः क्षीणत्वं जायते। अघटनघटनापटीयस्या मायाया विलासवैचित्र्यहेतुना दशायामत्र तत्त्वज्ञानिनः सद्वासना नाशत्वं क्षीणत्वं वा प्रतिपद्यते। ज्ञानयोगी कर्मयोगी चेति द्वौ मुक्तिपथपथिकौ स्तः, एतत्प्रतिपादितं पूर्वमेव। तदेतदुपनिषत्प्रोक्तविज्ञानेन प्रागुदीरितम्। ज्ञानयोगावस्थायां सद्वासनाया ऐकान्तिकं हानं सम्भवति। किन्तु परोपकारव्रतधारिणि कर्मयोगिनि सद्वासनायाः सम्पूर्णो विलयो भवितुं नार्हति। जगद्ब्रह्मस्वरूपमवधार्य तत्सेवारूपेण जगत्कल्याणबुद्धिवासना तत्रावश्यं तिष्ठति। यथा वासना विनाशमुपगच्छति नासौ वासनाशब्दवाच्या भवितुमर्हति। परन्तु संसारसेवाबुद्ध्या या किल छायारूपेण वासना तिष्ठति तामेव महर्षिः सूत्रकारः क्षीणनाम्ना प्रोवाच ॥ २२० ॥

ततः कः क्रम इत्युच्यते—

**ततोमनसोलयः ॥ २२१ ॥**

ततोऽनन्तरं मनसो लयो जायते। वासना किल मानसो धर्मः। पूर्वमसद्वासनायास्ततश्च सद्वासनाया विलयः। मनोधर्मरूपवासना-विलये मनस्तत्त्वमपि नश्यति। यथाऽग्निदग्धः चणकः स्वरूपतः परिचीयमानोऽपि नाङ्कुरोत्पादनाय प्रभवति, तथैव दशायामत्र तत्त्व-ज्ञानिनो महापुरुषस्य वासनयैव साकं मनसोऽपि नाशो जायते। सहजकर्मसाधनशरीरयात्रानिर्वाहाय मनसः स्वरूपे परिदृश्यमानेऽपि मनसो मानसिकत्वं नश्यत्येव ॥ २२१ ॥

एतत्क्रमरूपान्तरमभिधत्ते—

**क्षीणत्वं वा ॥ २२२ ॥**

मनसः क्षीणत्वं वाऽवगन्तव्यम्। असद्वासनाया नाशः सद्-वासनायश्च क्षीणत्वं प्रागभिहितम् तथैव मनोनाशस्यापि द्वितीयं भेद-मुपवर्णयति। सांख्ययोगकर्मयोगयोरवस्थाद्वयमनुसृत्य निर्णीतमे-तत्। प्रथमसूत्रे वर्णिता सांख्ययोगदशा, इयं किल द्वितीया दशा कर्मयोगस्यावगन्तव्या। क्रियमाणेऽपि कर्मणि ततो निर्लिप्तत्वकर्म-योगवैशिष्ट्यमवधेयम्। अतः कर्मयोगिनि कर्मदशावैशिष्ट्ये निमा-ल्यमाने मनसा क्षीणस्वरूपेण सद्भावः सुतरामभ्युगन्तव्य एव। परन्तु मनोदग्धबीजवत् बन्धनोत्पादने न समर्थमित्यवधेयम्॥२२२॥

तदनन्तरक्रमो निरूप्यते—

**सर्वान्ते कर्मणो लयः ॥ २२३ ॥**

स्पष्टोऽर्थः। सहजकर्मबलेन जीवः क्रमोन्नतिं कुर्वाणो मानवयोनि-

मासादयतीति प्रागेव प्रपञ्चितम् । जैवो क्रमोन्नतिरियमबाधा स्वाभाविकी च । मानवयोनिमासाद्य जैवकर्माधिकारेण गमागमचक्रे निपात एव जीवबन्धनस्वरूपम् । पुनर्मनोनाशेन जैवकर्मसम्बन्धः परित्यज्यते । मानवयोनिमासादयतो जीवस्य जैवकर्मणाऽनुरञ्जितं मनोविलीने सत् दग्धबीजवत् पूर्वशक्तिविहीनं नाङ्कुराय प्रभवति । तदा जैवकर्माधिकारः प्रणश्यति । तदीयं शरीरं कुलालचक्रवत् केवलं सहजकर्मणैव परिचाल्यते । इयमेव कर्मणोलयावस्था वस्तुतो जैवकर्मविलयेन बन्धने नष्टे कर्मलयः सुतरामुपपद्यत एव ॥ २२३ ॥

अन्तिमं क्रममाचष्टे—

**कर्मावसाने मुक्तिः ॥ २२४ ॥**

कर्मणोऽवसाने कर्मनाशानन्तरं मुक्तिरुदेति । कर्मणो भेदत्रयमनुसृत्य मुक्तेरपि त्रिविधो भेदः । जैवेन कर्मणा भाग्यवान् महापुरुष उग्रेण सत्कर्मफलेन शुक्लां गतिमाश्रयन् सप्तममूर्ध्वलोकमुपढौकमानः कर्मावसाने तत्रैव ब्रह्मीभावमापद्यते, एवं च जीवऐशकर्मबलेन देवपदधारी भूत्वा क्रमशः समुन्नतोभवन् त्रिमूर्त्तिपदमासादयति । अन्ते च कर्मवेगावसाने ब्रह्म भवति । तथा च जीवोऽत्रैव मृत्युलोके निवसन् पुनरपि सहजकर्माश्रयेण जीवितावस्थायामेव कुलालचक्रवत् शरीरं परिचालयन् जीवन्मुक्तपदवीं प्राप्तः शरीरान्ते ब्रह्मीभवति । एतदेव कर्मावसाने निःश्रेयसप्राप्तिरहस्यम् । वस्तुतोऽवस्थात्रयेऽप्यत्र स्वतन्त्रे पिण्डे वर्तमानेऽपि महात्माऽसौ मुक्त एव । कर्मबन्धनाभावे तत्र कर्मावसान एव मन्तव्यः । त्रिमूर्त्तिपदप्रतिष्ठितः कर्मण्याधिपत्येन लोकातीतशक्तिसद्भावेनेश्वर एवाऽसौ मन्तव्यः ॥ २२४ ॥

जीवन्मुक्तलक्षणं विविनक्ति—

**नात्र रागद्वेषाभिनिवेशाः ॥ २२५ ॥**

अत्र जीवन्मुक्तदशायां रागद्वेषाभिनिवेशा न भवन्ति। कर्मणः, पूर्णरूपेण नाशे जाते तन्महापुरुषान्तःकरणं रागद्वेषाभिनिवेशैरपरामृष्टमवगन्तव्यम्। व्युत्थानदशायां जीवन्मुक्ते रागादीनां लक्षणे परिदृश्यमानेऽपि स्वस्वरूपे विश्रान्तिकारणात् अविद्याया विनाशाच्च सर्वासु वृत्तिषु भर्जितबीजवत् जातासु तदन्तःकरणे रागद्वेषाभिनिवेशानां मूलनाश एव मन्तव्यः। तत्त्वज्ञानस्य पूर्णताया हेतुना मिथ्याज्ञानेन सहाविद्याया अपि विलयो जायते। अविद्याया विलीनत्वे रागद्वेषादीनां सद्भावो न सम्भवः। नष्टे मूले नैव शाखा न पत्रम्॥ २२५॥

अन्यच्च—

## स्तुतिनिन्दे समे॥ २२६॥

अविद्यानाशतोऽस्मिताविलयात्तदुत्पन्नस्तुतिनिन्दायाः समानता स्वतः सिद्धा। अस्मिताया नाशेन देहाभिमानाभावः। तदानीं देहसम्बद्धयोः स्तुतिनिन्दयोः सुखदुःखे जीवन्मुक्तमहात्मानं नैव स्प्रष्टुमर्हतः॥ २२६॥

अन्यदपि—

## सुखदुःखे च॥ २२७॥

जीवन्मुक्ते सुखदुःखे समे भवतः। महापुरुषस्य तस्यान्तःकरणं सुखदुःखयोः परस्परविरुद्धदशायामपि समतां धारयन्न विचलति। अनुकूले विषये सुखं प्रतिकूले च दुःखमिति मानवैरनुभूयते। तन्मौलिकं कारणं वासनारागद्वेषौ च। आत्मज्ञानिनि जीवन्मुक्ते योगिराजे वासनाविलयाद्रागद्वेषाभावाच्च सुखदुःखे स्थानं प्राप्तुं नार्हतः। यावत् शरीरं तिष्ठति तावत् लौकिकदृष्ट्या विषयासक्तजीवैस्तत्र सुखदुः‍ख-

सम्बन्धे परिदृश्यमानेऽपि वस्तुतस्तदन्तःकरणं सुखदुःखमतिशेत इत्यत्र न सन्देहः। सुखदुःखयोरुभयोरपि दशायां सात्त्विकधृतियुक्तत्वादेकरसत्वमविचलत्वमेव जीवन्मुक्तस्य लक्षणम् ॥ २२७ ॥

निष्कर्षं व्याहरति—

**निर्द्वन्द्वभावान्निःश्रेयसम् ॥ २२८ ॥**

निर्द्वन्द्वस्य भावान्निःश्रेयसाधिगमः। सृष्टिर्बन्धनं च द्वन्द्वमूलके। ब्रह्मणस्तच्छक्तेर्मायायाश्च द्रष्टृदृश्ययोश्चिज्जडयोश्च पृथक्पृथगस्तित्वानुभवः, एव सर्गनिदानम्। तथैव स्वपरयोः, रागद्वेषयोः, सुखदुःखयोरनुभूतिश्च बन्धनदशामूलम्। अतो द्वन्द्वसद्भावात् सृष्टिर्जीवबन्धनदशा चेत्यत्र न सन्देहलेशः। विद्यमाने द्वन्द्वे जीवो न बन्धनाद् विमुच्यते। द्वन्द्वकारणमविद्या। निष्कामकर्मयोगसाफल्याधिगमेन तत्त्वज्ञानस्य पूर्णता, अविद्याविलयश्च जायते। ततश्चावरणनाशाद् द्वन्द्वभावाभावः, स चैव निःश्रेयसहेतुः ॥ २२८ ॥

तत्त्वज्ञानप्रसंगादुच्यते—

**कर्महेतुः पुरुषप्रकृतिकालाः ॥ २२९ ॥**

पुरुषः प्रकृतिः कालश्चेति त्रयः कर्मणो हेतुभूता वेदितव्याः। द्वन्द्वरहितदशालाभाय येषां येषां विषयाणां परिज्ञानात् तत्त्वज्ञानसमुन्नतेः प्रयोजनीयता तन्निर्देशार्थमेव, पूज्यपादेन महर्षिणा सूत्रकृता सूत्रमिदमाविश्चक्रे। कर्मैव जीवत्वमुत्पादयति, तदेव जीवबन्धनदशां प्रापय्य गमनागमनचक्रे प्रवेशयति, तदेव पुनस्तच्चक्रान्मोचयित्वा जीवस्य स्वस्वरूपप्राप्तौ साहाय्यमाचरति। कर्मणः सर्वाम्यर्हितमाहात्म्यमतः पूर्वं बहुवारं प्रपञ्चितम्। अतः कर्मणो गतिं स्थितिम्, आध्यात्मिकं स्वरूपं च तत्त्वज्ञानिनं वेदयितुं सिद्धान्तोऽयं निर्णीयते यत् कर्मणः समुत्पत्तिस्थितिकारणं पुरुषप्रकृतिकाला एव ॥ २२९ ॥

विज्ञानमिदं स्पष्टयति—

**द्रष्टृत्वं पुरुषस्य ॥ २३० ॥**

पुरुषस्य द्रष्टृत्वमवधेयम् । यदि प्रकृतेः, सृष्टिस्थितिलयानां प्रकृतिगुणानां द्रष्टा पुरुष एव चेत्तर्हि कर्मणो द्रष्टाऽपि स एव भवितुमर्हतीत्यत्र कः सन्देहः ? कर्मणो जडत्वं सिद्धम् । चेतनरूपसञ्चालकमन्तरेण जडपदार्थः कार्यं सम्पादयितुं नार्हति । अतश्चेतनस्वरूपः पुरुषो द्रष्टा भूत्वा कर्मणः सम्पादने तत्फलोत्पत्तौ तदस्तित्वे च प्रधानसहायकः ॥ २३० ॥

पुनः स्पष्टीकुरुते—

**प्रकृतेरुपादानत्वम् ॥ २३१ ॥**

कर्मणः स्वरूपप्रकाशे प्रकृतेरुपादानत्वं विद्यते । प्राकृतिकं स्पन्दनमेव कर्मेति पूर्वमेव सुनिरूपितम् । अतः प्रकृतावेव कर्मविकासः । जलतरङ्गयोरन्योन्यमभेदः, जलादेव तरङ्गो जायते । अतः प्रकृतिसमुद्भूतं कर्मापि प्रकृतेरभिन्नमेव ॥ २३१ ॥

पुनश्चापि स्पष्टयति—

**सहकारित्वं कालस्य ॥ २३२ ॥**

कालस्य सहकारित्वमवधेयम् । पुरुषस्य कर्मद्रष्टृत्वं प्रकृतेरुपादानत्वं च प्रागेव निरूपितम् । कालस्य सहयोगितया कर्मणः प्रतिक्रिया सिध्यतीति सूत्रेणैतेन प्रतिपाद्यते । यथा चेतनसाहाय्यमन्तरेण कर्मणः सम्भावना नास्ति, यथा च प्रकृतेरस्तित्वं विना कर्मणोऽस्तित्वमसम्भवम्, तथैव कालसाहाय्यं विना कर्मणो बीजावस्था अङ्कुरावस्था फलावस्था नैव भवितुमर्हन्ति । संस्कारात् क्रियासिद्धिः तया च फलोत्पत्तिः; बीजाद्वृक्षस्य वृक्षाच्च बीजस्य परिणामः कालमपेक्षत इत्यत्र नास्ति संशयलेशोऽपि ॥ २३२ ॥

इदानीं तल्लयक्रम उच्यते—

## वासनालयात् काललयः ॥ २३३ ॥

वासनाया विलयात् कालस्यापि विलयो जायते। यथा कर्मणः समुत्पत्तौ स्थितौ च प्रथमं पुरुषस्य ततः प्रकृतेस्तदनन्तरं च कालस्योपयोगित्वं पूर्वं प्रतिपादितम्, तथैव कर्मणो विलये कालस्यापेक्षा सर्वाभ्यर्हितेति हेतोः कालस्यैव वर्णनं प्राग्विधीयते। कर्मलयात् पूर्वं वासनाक्षयस्यावश्यकत्वम्। यथा प्राणरक्षकस्य जलस्याभावे वृक्षो जीवितुं नाऽर्हति, तथैव वासनानाशात् कर्मास्तित्वमसम्भवम्। वासनायैव कर्मणः प्रकृतिस्तदस्तितता रक्षा च। वासनया विना जीवे कर्मेच्छा नोत्पद्यत इति सुगमः सर्वसंमतश्च सिद्धान्तः। प्रथमं सृष्टिकर्त्रा प्रजापतिना सृष्टिक्रियोत्पत्तिरपि "यथापूर्वमकल्पयत्" इति-सिद्धान्तमनुसृत्य वासनाभासरूपया वासनया संजायते। जीवन्मुक्तेषु परोपकारस्य जगदुपकारस्य कर्मणोऽस्तित्वे अवतारेषु च गुरुतर-कर्मस्वरूपविद्यमानतायाम् इच्छाभासरूपेच्छाभगवदिच्छया वा कारणायते। अतो वासनैव कर्मणि प्रधानहेतुः। यदि कर्मयोगेन तत्त्वज्ञानेन च वासनालयः क्रियेत, तदा काललयोऽपि सम्भवेत्। प्रकान्तरेणापि विज्ञानमिदमवधारयति। तथा हि—वर्णाश्रमधर्मस्य यथाविधिसाधनद्वारा यदा जीवोऽध्यात्मराज्येऽग्रसरति, तदानीमिदं दृश्यते यत्महात्मनि तत्र यथायथा वासनाह्रासमुपढौकते तथातथा कालविलयोऽपि संजायते। वर्णधर्मे आश्रमधर्मे चोत्तरोत्तरं वासनासंकोचः पूर्णनिवृत्तेरुदयश्च बोभूयते। एतत्परिणामेनैव कोटि-जन्मभिरपि यस्य गमागमचक्रस्य भेदनमतिदुःशकम्, तस्य चतुर्वर्णानां चतुर्भिरेव जन्मभिर्भेदनं जायते। क्रमशो वासना-क्षयद्वारा कालविलयेन स्वल्पसमयेनैव बहुकार्यं सम्पद्यते। शक्तेर्हा-नात्पदार्थहानिः, अतो निष्कामे पुरुषे यदा कालशक्तिर्विनश्यति,

तदा वासनाराहित्यात् तत्र कालशक्तेरपि हानिः सिद्धा। समष्टिरूपेण कालस्यास्तित्वे सिद्धेऽपि व्यष्टिरूपतः कालविलयो जायत इत्यभ्युपगन्तव्यमेवास्ते ॥ २३३ ॥

क्रमान्तरमुच्यते—

**तदा कर्मनिवृत्तिः सहकार्यभावात् ॥ २३४ ॥**

तदा तस्मिन् काले सहकारिणः सहयोगिनः अभावात् असद्भावात् कर्मणो निवृत्तिर्जायते। कालसहकारितयैव कर्मसिद्धिरिति पूर्वमुक्तम्। अतो यत्र केन्द्रे कालस्य सहयोगिता प्रणश्यति, तत्र कर्मलयः स्वतः सिद्धः। प्रवृत्तिनाशेन निवृत्तिरुत्पत्त्या सहैव वासनायाः क्रमशः क्षयेण अन्ते वासनायाः पूर्णो लयो जायते। तदा निष्कामान्तःकरणे कालप्रभावो नोत्पद्यते। वासनानाशेन निष्काममन्तःकरणं कथमिव कर्मबन्धनाद् विमुच्यत इति पूर्वमेव सुनिर्णीतम्। सुतरां वासनाविनाशपूर्वककालशक्तिहानद्वारा महापुरुषान्तःकरणकेन्द्रे सञ्चितक्रियमाणयोर्द्वयोरपि कर्मणो विलयो जायते। अन्यच्च कुलालचक्रवत् प्रारब्धवेगेन शरीरक्रियायां विद्यमानायामपि साकमेव वासनानाशेन मनोनाशे सम्पन्ने कालानुभवो विनश्यति। यतस्तस्य तत्त्वज्ञानिनः कृते शरीरस्यास्तित्वमनस्तित्वं च समानमेव। अतस्तदानीं प्रारब्धं कर्मापि प्रकारान्तरेण शक्तिहीनतां प्रपद्यते। सुतरामिदं सिद्धं यत् वासनानाशेन कालनाशस्तेन च कर्मनाशस्ततश्च स्वरूपोपलब्धिरिति ॥ २३४ ॥

मुक्तिप्रसङ्गात् कर्मयोगमहत्त्वं प्रतिपाद्यते—

**वासनालयः कर्मयोगात् ॥ २३५ ॥**

कर्मयोगाद् वासनाया विलयः सम्पद्यते। कर्मप्रसङ्गतो निःश्रेयसप्राप्तिक्रमं निरूप्य पूज्यपादो महर्षिः सूत्रकारः कर्ममहत्त्वप्रतिपादनार्थं

निःश्रेयसप्राप्तिहेतुभूतस्य कर्मणो विशिष्टामुपयोगितां प्रदर्शयितुमभिधत्ते—यद् यथा वासनाविलयेन कर्मलयस्तेन च क्रियाया विलयः, ततश्च क्रिया स्वविलयेन सहैव मुक्तिपदमाविर्भावयति, तथैव सुकौशलपूर्णक्रियोत्पन्नः कर्मयोगो वासनां विनाशयति। यद्यपि मतान्तरं वासनानाशनिदानं तत्त्वज्ञानमेव निश्चिनोति परन्तु कर्ममीमांसादर्शनमतं तु कर्मयोग एव। वस्तुतो ज्ञानेनैवाज्ञाननाशः, प्रकाश एवान्धकारं नाशयति। किन्तु विना कर्मयोगं तत्त्वज्ञानाधिगमो न सम्भाव्यते। पूर्वमेव निर्णीतमिदं यत् विना कर्म जीवो न स्थातुमर्हति। कर्माभावोऽकर्मैव कर्मयोगस्य दशा सिध्यति, किन्तु कर्माभावान्नासौ सुचारुरूपेण सिद्धिमेति। अतः सुकौशलपूर्णं कर्म तत्त्वज्ञानमुत्पादयति, तद्भिन्नं कर्म तु तत्त्वज्ञानाविर्भावबाधकम्। अत एतद्विज्ञानानुसारेण वासनाजालनिवारकसुकौशलपूर्णकर्मयोग एव वासनाविलयहेतुः। यथायथा कर्मयोगी स्वीयकर्मयोगे सिद्धिं लभते, तथा तथा तत्र मलविक्षेपावरणहानपूर्वकं तत्त्वज्ञानज्योतिरुदेति। अतः कर्मयोग एव तत्त्वज्ञानक्रमविकाशस्य वासनाविलयस्य च हेतुभूतो मन्तव्यः ॥२३५॥

तदीयं पुनर्वैशिष्ट्यमुच्यते—

## आद्यायां सुकरः ॥ २३६ ॥

कर्मयोगस्य विशिष्टं महत्त्वमिदं यत् अन्यप्रकारसाधनेषु आद्यायां प्रथमदशायामेवासौ सुकरः सुसाध्यः। जीवेन कर्म क्रियत एव। आर्यः अनार्यो वा स्त्री, पुरुषो वा, चातुर्वर्णिकः चातुराश्रमिको वा कोऽपि कथं न स्यात् सर्वोऽपि स्वीयप्रकृतिप्रवृत्त्यधिकारानुगुण्येन कर्म करोत्येव। भक्तिसाधने योगसाधने ज्ञानसाधने च न तथा स्वाभाविकता। यतस्तानि साधनानि आग्रहेणानुष्ठीयन्ते। स्वभावसिद्धसाधने सदैव सौकर्यं तिष्ठति। अन्यच्च—स्वभावसिद्धे कर्मण्यनुष्ठीयमाने क्रमशः कामनाराहित्यचेष्टा सौकर्यमापद्यते। अतो वर्णाश्रम-

धर्मावलम्बिनो नरो नार्यश्च स्वेष्टदेवसमर्पणपूर्वकसंकल्पानुष्ठानरताः साधनपूर्वावस्थात एव कर्मयोगाभ्यासानुभवं नैव कर्त्तुं पारयन्ति । विशेषतश्च कर्मयोगे सर्वेषां समानोऽधिकारः, स हि सुकरश्च ॥२३६॥

पुनरुच्यते—

## ज्ञानस्थापकोऽन्तिमायाम् ॥ २३७ ॥

अन्तिमायामवस्थायां कर्मयोगो ज्ञाने स्थापकः ज्ञानस्थिरत्वरक्षकः । कर्म तद्बीजं संस्कारश्चोभावेतौ जीवे परिवर्त्तनमुत्पादयतः । विशेषतः संस्कारस्वरूपदुर्दमनीयवायुवेगेनैव जीवान्तःकरणजलाशये वृत्तिस्वरूपा अनन्ता वीचिमालाः समुत्पद्यन्ते । ता एवान्तःकरणचाञ्चल्यहेतवः सन्ति । कर्मयोगद्वारा दुर्निग्रहकर्मराज्ये समता समुत्पद्यते । अतस्तत्र निर्विकल्पसमाधिदशा स्थायिनी तिष्ठति । तस्मात् स्वीकार्यमेवैतद् यत् कर्मयोग एव पूर्णतां प्राप्तो यदाऽन्तिमावस्थायां प्रापयति, तदा तत्त्वज्ञानपूर्णतासम्पादनेनात्मज्ञानं स्थितिशीलं विधत्ते । योगिराजो यदा स्वीयनिर्विकल्पसमाधिदशायां स्वरूपस्थो भवति, तदाऽसौ ज्ञानस्वरूप एव तिष्ठति, तस्य व्युत्थानदशायां कर्मयोग एव तदात्मज्ञानं स्थितिशीलं विधातुमेकमात्रसहायको बोभूयते ॥२३७॥

पुनश्चापि विज्ञानं तत्सुस्पष्टयति—

## विषयसमता तत्प्रसादः ॥ २३८ ॥

विषये समता समत्वमेव तस्य प्रसादोऽवधेयः । यावत् शरीरेन्द्रियमनांसि तिष्ठन्ति तावत्भर्जितबीजवत्शक्तिहीनमपि मनो विषयाननुभवति । यथा भर्जितचणको नांकुराय प्रकल्पते, परन्त्वन्नत्वं तत्र तिष्ठत्येव, तेन च क्षुधानिवृत्तिर्जायते, तथैव जीवन्मुक्तमानसमपि शक्तिहीनमपि विषयाननुभवत्येव वैशिष्ट्यमिदं यत् विषयाणां प्राप्तावप्राप्तौ

वा साधारणे जीवे यादृशी चञ्चलता समुत्पद्यते, जीवन्मुक्ते तथा न भवति। विषयभोगेनापि तदीयान्तःकरणसमता तिष्ठत्येव ॥ २३८ ॥

मोक्षप्रसङ्गादभिधीयते—

**स्वाभाविकक्रियावेगदर्शनं ज्ञानतत्त्वम् ॥ २३९ ॥**

स्वाभाविक्याः क्रियाया यो वेगस्तस्य दर्शनं ज्ञानतत्त्वमवधेयम्। कर्मयोगे दृढत्वसम्पादनाय कर्मण्यकर्मणः, अकर्मणि च कर्मणः प्रदर्शनाय तथा च तत्त्वज्ञानपरिपूर्णतासम्पादनहेतवे प्रोच्यते यत्कर्मप्रवाहस्वाभाविकदशावेगस्य यथार्थस्वरूपतस्तृतीयनेत्रापरनामकज्ञाननेत्रद्वारा द्रष्टृत्वमेव ज्ञानरहस्यम्। जीवन्मुक्तो यदा प्राचीनसंगृहीतस्वरूपसञ्चितेन नवीनेन क्रियमाणेन च कर्मणा न बध्यते तदानीं प्रारब्धवेगवशादेव तदीयं शरीरं तिष्ठति। तत्समयं प्रारब्धवेगास्तिता, तथा च शरीरावस्थितिः केवलया प्रकृतिस्वाभाविकक्रिययैव सम्पद्यते। तदा जीवन्मुक्तस्यान्तःकरणं संस्कारवासनाभ्यां विहीनं स्वच्छतां प्रपद्यते। अवस्थायामस्यां द्रष्टृदृश्यदर्शनरूपत्रिपुटिस्तिष्ठति, यतोऽसौ स्वाभाविकी। अतः समुन्नततमायामस्यां स्थितौ कर्मणस्तत्फलस्य च वैशिष्ट्ये दृष्टिर्न निपतति। केवलं कर्मणः स्वाभाविकगतावेव दृष्टिस्तिष्ठति ॥ २३९ ॥

विज्ञानमिदं पुनर्द्रढयति—

**कुलालचक्रवद्वेगः ॥ २४० ॥**

कुलालस्य कुम्भकारस्य चक्र इव प्रारब्धजनितशरीरवेगो जीवन्मुक्ते तिष्ठति। स्वाभाविकक्रियावेगस्वरूपं सुस्पष्टयितुं पूज्यचरणसूत्रकारो महर्षिः सूत्रमेतदाविश्चक्रे। कुलालः स्वचक्रं दण्डेनैकेन भ्रामयित्वा दण्डमपसारयति, तदानीं कुम्भकारहस्तशक्तिर्दण्डद्वारा तच्चक्रे

यावती प्राग्रुद्यत, तच्छक्तिसमाप्तिकालपर्यन्तं चक्रोऽसौ परिभ्राम्यति, ततः शाम्यति तथैव जीवन्मुक्ते सञ्चितक्रियमाणकर्माणि पूर्वत एव शक्तिहीनत्वात् शान्तिमापद्यन्ते । परन्तु यस्य प्रारब्धकर्मणो वेगेनैतज्जन्मशरीरं समुदपद्यत, तद्वेगसमाप्तिं यावत् कुलालचक्रवत् जीवन्मुक्तशरीरं तिष्ठति । शरीरभोगस्तेन भुज्यत एव । योगिराजः स्वकर्मयोगप्रभावात् समभावापन्नान्तःकरणेनात्मज्ञानमनुभवन् सदैव कर्मणः स्वाभाविकीं गतिमवलोकमानः स्वस्वरूपेऽधिष्ठानं विधत्ते ॥ २४० ॥

एतदवस्थाया दिग्दर्शनं कारयति—

**कार्यकारणयोरैक्यं तद्भावरूपम् ॥ २४१ ॥**

कार्यस्य कारणस्य चैक्यमेव तद्भावरूपं तत्स्वरूपमित्यर्थः । तत्त्वज्ञानपरिपूर्णताप्रभावात् तत्त्वज्ञो महात्मा कार्यब्रह्म कारणब्रह्मचैक्येनाद्वितीयस्वरूपेण द्रष्टुं सामर्थ्यं लभते । एतदवस्थायां तृतीयं नेत्रं समुन्मिलति, येन योगिराजोऽसौ नैजं शरीरं तज्जनितभोगं च कुलालचक्रवदनुभवितुं समर्थो जायते ॥ २४१ ॥

प्रसङ्गतः शंका समाधीयते—

**तत्कार्यं भगवतोभेदाभावात् ॥ २४२ ॥**

भेदस्य अभावात् भेदराहित्यात् तत्कार्यं तस्य जीवन्मुक्तस्य कार्यं भगवत ईश्वरस्यैवावधेयम् । जिज्ञासुरत्र शङ्कते जीवन्मुक्तेन कर्मयोगिना लोकदृष्ट्या शुभमशुभं च कार्यमनुष्ठीयते, तस्य किं कारणम् ? लौकिकदृष्ट्या भक्ते रागः अभक्ते च विद्वेषः कर्त्तव्यकर्मणि चाभिनिवेशः प्रदर्श्यते, किमत्र कारणम् ? ज्ञानस्य परिपूर्णतायां सत्यामपि जीवन्मुक्ते भ्रमप्रमादसदृशकार्यकलापः कथं परिदृश्यते ? समाधत्ते—अविद्योपहितचेतनो जीवः । मायोपहितश्चेश्वरः । जीवोऽविद्याधीनः ।

ईश्वरस्तु मायामधिकृत्य तिष्ठति । एकस्या एव महामायाया एतद्-वस्थाद्वयभेदसत्त्वेऽपि अधिष्ठातृद्वयस्वरूपे दिनरात्रिवदन्तरम् । जीवः स्वार्थी, अज्ञानाच्छन्नः, अहंकारवान् देशकालपरिच्छिन्नश्च । ईश्वरस्तु परार्थी ज्ञानपरिपूर्णः अहंतत्त्वातीतः सर्वव्यापको देशकाल-मतिशेते । वस्तुतोऽविद्याजनितमज्ञानमेव जीवे भेदबुद्धिमुत्पाद-यति । अन्यथा चित्स्वरूपविचारत उभयोर्जीवेश्वरयोरभेद एव । अहं-तत्त्वनाशाद् अविद्याप्रभावविलयेन च अद्वैतस्थितेरुदयाद् भेदबुद्धेर-भावः । तदानीं कुलालचक्रवत् भ्रमणशीलः पिण्डधारी जीवन्मुक्तो महापुरुषो यत् कार्यं विधत्ते तत्सर्वं भगवत्केन्द्रपरिचालितं मन्तव्यम् । अत एव भगवति भागवते चाभेदः । अतो जीवन्मुक्तेन महात्मना विधीयमानः कार्यकलापः लौकिकदृष्ट्या शुभोऽशुभश्च प्रतीयमानोऽपि देशकालपात्रानुकूलो हितकरश्चेत्यत्र न सन्देहलेशः ॥ २४२ ॥

प्रसंगात् कर्ममहत्त्वमुच्यते—

## तस्मादविरुद्धः कर्मयोगः ॥ २४३ ॥

तस्मात् कारणात् कर्मयोगपरायणजीवन्मुक्तकर्मणो भगवत्कार्य-सत्त्वात् कर्मयोगोऽविरुद्धः । जीवन्मुक्तमहापुरुषकार्यं देशकालपात्र-प्रकृत्यविरुद्धम् । अतः पूर्वप्रतिपादितशंकाया अवसर एव नास्ति । तत्परिपूर्णतायां उपकारित्वे वा न कोऽपि संशयः । देशकालयोः समष्टिकर्मणा पात्रस्य च व्यष्टिकर्मणा विशिष्टः सम्बन्धः । जीवन्मुक्तस्य कर्मयोगिनो महात्मनः क्रियमाणकार्येषु अहंकारराहित्यं निभाल्यते । यतस्तदन्तःकरणं व्यापकमुदारं च सद् भगवद्भावतां प्रपद्यते । तदानीं भगवतः प्रेरणयैव धर्मसंस्थापनार्थं सृष्टेरनुकूलचेष्टासद्भाव-हेतुना तदीयानि सर्वाण्यपि कर्माणि देशकालाविरुद्धानीत्यत्र न सन्देहलेशः । जीवन्मुक्तान्तःकरणे स्वीयपरकीयभावशून्यत्वात् सांसा-रिकजीवमात्रस्वकुटुम्बावधारणत्वाच्च पक्षपातस्य रागद्वेषयोर्वा सम्भा-

वनाऽपि नास्ति। अन्यच्च भगवत्प्रेरणयैव कार्यानुष्ठानत्वात् तदीयः कर्मकलापो नूनमेव पात्राविरुद्धः। परमेश्वरस्तु केवलं द्रष्टा, निर्लिप्तो निरीहश्चातस्तद्द्वारा भागवतचित्ते तत्प्रेरणायाः कुतः सम्भावनेति शंका समाधीयते। यद्यपि परमेश्वरः प्रकृतेर्द्रष्टा क्लेशकर्मविपाकादिभिरपरामृष्टः। परन्तु कर्मणः प्रकृतिसम्भूतत्वात् स्वाभाविककर्माणि तदधीनान्येव। अन्यच्च-अध्यात्माधिदैवाधिभूतप्राकृतिककार्यसञ्चालका ऋषयो देवाः पितरश्च तद्विभूतय एव। अतः स्वाभाविकं कर्म तत्प्रेरितमेवावधेयम्। अन्यथा धर्मसंस्थापनाय तस्य तद्विभूतेश्च प्रेरणमसंगतं स्यात्। अतोऽत्र न शंकावसरः। जीवन्मुक्तकर्माणि प्रकृतेरनुकूलानीति सुस्पष्टमेव। यतः स्वस्वरूपस्थितत्वात् सहजकर्माधीनत्वाच्च तदीयाः सर्वा अपि चेष्टाः प्राकृतिक्य एव भवन्ति। किं जीवन्मुक्तेऽविरुद्धदशासम्भावना नास्ति, किं वा सर्वेष्वपि कर्मयोगिष्वेतत् किं सम्भवतीत्यादिशंकानां समाधानमिदं यत्-आरुरुक्षु-योगारूढ-जीवन्मुक्तसाधकप्रभृतिषु कर्मयोगिषु कर्मयोगस्य यावानधिकारः सर्वोऽपि बाधारहित एव। आरुरुक्षुर्योगी यावत्कालपर्यन्तं युक्तस्तिष्ठति, तावत्समयपर्यन्तं तदनुष्ठितकर्मणः कामनाहंकारशून्यत्वात् तात्कालिकं तदीयं कर्म मुक्तात्मसमानमेव। निष्कर्षोऽयं यदविरुद्धकर्मानुष्ठायिनी शक्तिर्व्यक्तिविशेषस्य न भवति, सा तु कर्मयोगसुकौशलपूर्णाधिकारस्यैव मन्यते ॥ २४३ ॥

अन्यद् वैशिष्ट्यमुच्यते—

## तत्र प्रत्यवायाभावः ॥ २४४ ॥

तत्र कर्मयोगिनि प्रत्यवायस्य पापस्याभावो मन्यते। जीवन्मुक्तस्य का कथा सामान्यानां कर्मयोगिनामपि कर्माणि प्रत्यवायरहितानि जायन्ते। सकामकर्मणि बहुविधप्रत्यवायसम्भावना तिष्ठति।

यतः कर्मणि कामनासम्बन्धत्वात् देशकालसमष्टिकर्माणि बाधां जनयन्ति । कर्त्तुः प्रारब्धकर्माणि, सदसत्कर्मनियन्तारो देवासुराः द्वेषिणो निन्दका मानवाश्च बाधामुपस्थापयितुमर्हन्ति, एवमादयो बहुविधा बाधाः सकामकर्मणि प्राप्ता भवितुं शक्नुवन्ति । परन्तु निष्कामकर्मयोगेऽपरिपक्वदशायामपि बाधासम्भावना नास्ति । आरुरुक्षुदशामारूढावस्थां वा प्राप्तस्य वा कर्मयोगिनो धृतिशालित्वे स्वकर्त्तव्यकर्मणि दृढत्वे च कापि बाधा तद्गतिरोधेन प्रभवति । यतः सर्वा अपि बाधाः कामनाश्रयेणैव प्रतिद्वन्द्विरूपेण साफल्य-मधिगच्छन्ति । अन्यच्च मूले वासनाया अभावात् कार्यफलसिद्ध्य-सिद्धिजनितचित्तचाञ्चल्यराहित्यात् योगयुक्तावस्थायां दैवसाहाय्य-प्राप्तिसम्भावना तिष्ठति । कर्मयोगे केवलकर्त्तव्यबुद्धिसत्वात् कर्त्त-रुत्साहावरोधस्य नैव सम्भावना, न चापि दैवसाहाय्याधिगमे किञ्चिदप्यसौविध्यमवाप्यते । अतस्तन्मार्गः प्रत्यवायशून्यतां प्रपद्यते ।। २४४ ।।

द्वितीयं वैशिष्ट्यमुच्यते—

## अनवपातः ।। २४५ ।।

तत्र अनवपातः पतनस्याऽभावो भवति । मुमुक्षुर्यावत् कर्म-योगपरिपूर्णतां न प्रतिपद्यते, तावत्तस्यारुरुक्षुदशायां वर्त्तमानस्य पतनसम्भावना तिष्ठति । यतस्तदानीं मलविक्षेपावरणानां न्यूनत्वे-ऽपि नैव पूर्णरूपेण नाशः । परन्तु यदि धैर्यमाश्रित्य कर्मयोगमनु-सरन् तिष्ठेत् तर्हि पतनसम्भावना न स्यात् उत्तरोत्तरं क्रमोन्नतिरेव सम्भवेत् । सुकौशलपूर्णकर्मणा मलमपसरति । वासनाविरहितं भग-वत्प्रीत्यर्थं क्रियमाणं कर्म उपासनारूपेण परिणतं सद् विक्षेपं निरा-करोति । कर्त्तव्यबुद्ध्या विधीयमानं कर्म समत्वमुपेत्यावरणं विना-शयति । एवं हि यद्येकमात्रकर्मयोगस्यैव धैर्यमनुसृत्य नियमपूर्वक-परिपालनेन मुक्तिपथपथिकस्य पतनसम्भावना न तिष्ठति ।। २४५ ।।

तृतीयं वैशिष्ट्यमुच्यते—

## स्वार्थहानम् ॥ २४६ ॥

तत्र कर्मयोगे स्वार्थस्य हानिर्जायते । जीवेश्वरयोरन्तरमुक्तपूर्वम् । ईश्वरः सर्वज्ञो जीवोऽल्पज्ञः । जीवसम्मुखे सर्वजीवहितकारितया परार्थितया चेश्वरस्य महत्त्वं यथा विद्यते तथैव जीवस्य महत्त्वं तदीयस्वार्थितायामेव प्रतिष्ठितम् । यथा यथा जीवः स्वार्थं विजहाति तथा तथैवासावीश्वरसान्निध्यमासादयति । वस्तुतः स्वार्थस्य सम्पूर्णहानिरेव मुक्तिपदप्राप्तिनिदानम् । यथा किलाहङ्कारहानेनैव मुक्तिरिति उपासनाकाण्डसिद्धान्तस्तथैव स्वार्थहानेन मोक्ष इति कर्मकाण्डसिद्धान्तः । कर्मयोगक्रमोन्नत्या यथा यथा वासनाक्षयो जायते, तथा तथा तत्रारुरुक्षुमुनौ स्वार्थहानिरित्यत्र न संदेहः ॥२४६॥

चतुर्थं विशेषत्वं प्रतिपादयति—

## भगवत्कार्यसिद्धिः ॥ २४७ ॥

निष्कामकर्मयोगेन भगवत ईश्वरस्य यत् कार्यं तस्य सिद्धिर्भवति । पूर्वमेव निर्णीतमिदं यत् कर्मयोगनिष्णातजीवन्मुक्तमहापुरुषस्य व्यक्तिगतं जीवकेन्द्रं प्रणश्यति, ईश्वरप्रेरणयैव कुलालचक्रवद् भ्रमणशीलो यदि महात्माऽसौ कार्यकलापमनुतिष्ठति, तदेदमभ्युपगन्तव्यमेव यत् तस्य द्वारा भगवत्कार्यसिद्धिर्जायते । भगवति भागवते च भेदाभावात् भागवतस्य कार्यमपि भगवत एव । प्रकृतिस्पन्दनेन कर्मोत्पत्तिरिति पूर्वमेव निर्णीतम् । कर्म प्रकृत्या संजायते । परमेश्वरस्येक्षणमन्तरेण प्रकृतिः कार्यकारिणी न भवति । अप्राकृतकं कर्म जीवकेन्द्रात् प्राकृतिकं चेश्वरकेन्द्रादुद्भवति । अतो जीवन्मुक्तमहात्मनि या क्रियाः समुत्पद्यते, सा ब्रह्मप्रकृतिसमुद्भूतैव मन्तव्या न जीवप्रकृतिसमुद्भवेति ॥ २४७ ॥

मोक्षप्रसंगादुच्यते—

## सदसन्नाशः ॥ २४८ ॥

कर्मयोगस्य पूर्णावस्थायां सतोऽसतश्च नाशो जायते। विद्या अविद्या चोभे एव ब्रह्मप्रकृतिभेदस्वरूपे। परिणामिनोऽसद्भावा अपरिणामिनः सद्भावाश्च ब्रह्मण्येव तिष्ठन्ति। जगतस्तत्रैव स्थितत्वात्तद्विराट्स्वरूपस्यैतदेव वैशिष्ट्यं विद्यते। एवमेव भगवद्भावापन्नस्य परमभागवतस्य जीवन्मुक्तमहापुरुषस्य कर्मयोगस्वरूपक्रियाकलापाः सदसद्भावभेदविरहिता इति वैज्ञानिकं सत्यम्॥२४८॥

अन्यदपि—

## साहजिकोऽसौ ॥ २४९ ॥

असौ कर्मयोगी जीवन्मुक्तमहापुरुषः साहजिकः सहजकर्माधीनो जायते। पूर्वसूत्रेषु कर्मयोगस्य महत्त्वं विशिष्टत्वं च सार्वभौमरूपेण प्रदर्शितम्। आरुरुक्षौ योगारूढे वा महात्मनि कर्मयोगस्यालौकिकापरिमेया शक्तिः यथाधिकारं सर्वत्रैव कार्यमनुतिष्ठति। आरुरुक्षुर्योगिराजो बाधाप्रत्यवायरहितः पतनभयशून्यः, जीवसहजातस्वार्थविरहितो भाग्यशाली तत्त्वज्ञानमाश्रयन्नन्ते नूनमेव जीवन्मुक्तपदवीमधिकरोति। ततश्च योगारूढदशायामसौ योगिराजो लोकातीतजीवन्मुक्तपदं प्राप्नोति। ब्रह्मभूतदशायामत्र भगवत्कार्यं सम्पादयन् जीवकोटित उन्मुक्तो भेदभावविरहितः, प्रकृतिसहजातकर्मयोगस्यान्तिमं फलमधिगच्छन् सहजकर्माधिकृत्य प्रवाहपतिततृणवत् कर्मप्रवाहे प्रवहन् प्रकृतिक्रोडशायी जायते। यथा सद्यः प्रसूतो बालकः सर्वतो निजशक्तिरहितः केवलं मातृशक्त्यैव जीवति, सर्वथा मातृस्नेहमाश्रयन् स्वीयेनासामर्थ्येन किञ्चिदपि कर्त्तुमसमर्थो मातृद्वारैवोत्तमरूपेण जीवनयात्रां निर्वहति नैजमस्तित्वं विस्मृत्य मातर्यैवानन्यलक्ष्यं विधत्ते; तथैव सर्वकर्मविमुक्तो मुक्तात्मा सहजकर्माश्रयेण कुलालचक्रवत् शरीरं परिचालयन् प्रारब्धवेगक्षयं यावत् लौकिकदृष्ट्या शरीरधारी भवन् प्रतीयते॥ २४९ ॥

सर्वाभ्यर्हितमहत्त्वं प्रतिपादयति—

**अत्र काम्यफलं निःश्रेयसं च ॥ २५० ॥**

अत्र दशायां काम्यफलं निःश्रेयसं चाधिगम्यते। लोकातीतदशायामत्र यदा कर्मयोगपूर्णताफलस्वरूपं जीवन्मुक्तिपदमुदेति, तदानीं महात्मना तेन निःश्रेयसं काम्यफलसमानभोगश्च प्राप्यते। साधनदशायां वैराग्यपरिपोषणार्थं योगी साधको विषयान् परित्यजन् मोक्षमार्गेऽग्रेसरति, तदा तस्य त्यागग्रहणभेदज्ञानमवश्यमेव तिष्ठति। दशेयं भेदाभेदरहितसमदशाप्राप्तयोगारूढावस्थायां न जायते। अलौकिकदशायामत्र मुक्तात्मा सिद्ध्यसिद्ध्योः समतामुपैति। योगयुक्तावस्थां प्राप्तोऽसौ इन्द्रियार्थमिन्द्रियकर्माणि कुर्वन् पद्मपत्रवन्निलिप्तस्तिष्ठति। कर्माणि कुर्वन्नपि ब्रह्मस्वरूपो महापुरुषोऽसौ परमात्मवत् कर्मातीतः केवलं कर्मद्रष्टा जायते। परन्तु शरीरसद्भावात् तेन सह प्रारब्धकर्मसत्त्वात् भोगसम्बन्धस्तिष्ठत्येव। अतः प्रकारान्तरेण निःश्रेयसमधिगतोऽसौ योगिराजः कामनारहितोऽपि कामनासंजातभोगादीन् प्राप्नोति। विशेषतश्च भगवति भागवते च भेदराहित्याद् आत्मपूजाप्रसादाधिकारितां प्रपद्यते। एतेनापि कारणेन दिव्यभोगानां तत्संमुखोपस्थानं सम्भवति। ब्रह्मप्रकृतिसहजातत्वात् कर्मब्रह्मस्वरूपम्। जीवकेन्द्रपरिचालितं तत् अविद्याग्रस्तजीवसंस्पर्शदोषेण दूषितं जायते। परन्तु तदेव कर्म यदि परमेश्वरकेन्द्रसञ्चालितं स्यात् तर्हि दोषरहितं ब्रह्मस्वरूपमेवावधेयम्। एतादृशकर्मयोगयुक्तो मुक्तात्मा मुक्तेर्मुक्तेश्चाधिकारी वेद्यः। अत्र सूत्रे वचनद्विरुक्तिः सिद्धान्तदृढतायै, तत्त्वजिज्ञासुशंकापनोदनार्थमवधेया। ब्रह्मणे ब्रह्मप्रकृतये, कर्मयोगाय जीवन्मुक्तमहापुरुषाय च भूयोभूयो नमोनमः॥ २५० ॥

इतिश्रीकर्ममीमांसादर्शने भगवत्पूज्यपाद-महर्षि-स्वामिज्ञानानन्दविरचितभाष्ये चतुर्थोमोक्षपादः समाप्तः समाप्तश्चायं ग्रन्थः।

———